॥ श्रीनिवासार्चादशकम् ॥

श्रीवासदेवकरुणाशिशिरालोकामृतावसेकेन ।
उपचितबहुविधपुण्यं धन्यं श्रीवेङ्कटाचलं वन्दे ॥ १॥

बहुलशिलातलतरुततितृणगणवीरुज्झरीमयश्शिखरी ।
यो गीयते परिवृतो योगीन्द्रैश्श्रीनिवास एवेति ॥ २॥

पशुपक्षिमृगवनस्पतितृणगुल्मलताशिलासु चात्मजनिम् ।
यत्रार्थयन्ति मुनयश्चित्राकारेषु निर्झरेष्वपि च ॥ ३॥

परवासुदेव एव स्थिरवासं प्राप्य यत्र सह रमया ।
चिरमानन्दमुपैति हि परमानन्दं विहाय वैकुण्ठम् ॥ ४॥

मलसङ्कुले कलावपि फलजालान्यैहिकान्यपीह जनाः ।
स्वाभीष्टानि लभन्ते यत्र श्रीवासदेवकरुणातः ॥ ५॥

नारायणाचलेऽस्मिन्नाराच्छ्रीस्वामिपुष्करिण्याश्च ।
तीरालये विभान्तं नारायणमाश्रये रमाकान्तम् ॥ ६॥

अञ्जनगिरिशिखरालयमञ्जनरोचिर्निरञ्जनं धाम ।
कञ्जविलोचनमीडे पिञ्जरवक्षश्श्रियस्त्विषा किमपि ॥ ७॥

नारायणाद्रिवासं श्रीश्रीवासं रमाक्षमावासम् ।
हरिमणिगिरिसमभासं सुरुचिरहासं नमाम्यवितदासम् ॥ ८॥

आश्रितफणीन्द्रशैलं हरिमणिनीलं सुवर्णसमचेलम् ।
??? कमलालोलं नमामि समशीलम् ॥ ९॥

अधरितसुरतरुदानं रक्षितदीनं रजस्तमोहीनम् ।
कमलाकृतबहुमानं श्रीनिधिमेनं श्रये श्रिताधीनम् ॥ १०॥

सुरगणसेवितचरणं श्रितजनशरणं श्रिताबलाभरणम् ।
कर्तुं भवाब्धितरणं कलये शरणं वृषाद्रिवरशरणम् ॥ ११॥

वृषशैलशिखरिजातं वारिधिजातालताभिपरिवीतम् ।
वन्दे सुपारिजातं विश्वजनेभ्यो वितीर्णफलजातम् ॥ १२॥

